## ८१ (१०.१८)

**१–१४ संकुसुको यामायनः । १–४ मृत्युः, ५ धाता, ६ त्वष्टा, ७–१४ पितृमेधः, १४ प्रजापतिर्वा । त्रिष्टुप्, ११ प्रस्तारपङ्क्तिः, १३ जगती, १४ अनुष्टुप् ।**

परं मृत्यो अनु परेहि पन्थां यस्ते स्व इतरो देवयानात् ।
चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजां रीरिषो मोत वीरान् ॥ १ ॥
मृत्योः पदं योपयन्तो यदैत द्राघीय आयुः प्रतरं दधानाः ।
आप्यायमानाः प्रजया धनेन शुद्धाः पूता भवत यज्ञियासः ॥ २ ॥
इमे जीवा वि मृतैराववृत्रन्नभूद्भद्रा देवहूतिर्नो अद्य ।
प्राञ्चो अगाम नृतये हसाय द्राघीय आयुः प्रतरं दधानाः ॥ ३ ॥
इमं जीवेभ्यः परिधिं दधामि मैषां नु गादपरो अर्थमेतम् ।
शतं जीवन्तु शरदः पुरूचीरन्तर्मृत्युं दधतां पर्वतेन ॥ ४ ॥
यथाहान्यनुपूर्वं भवन्ति यथ ऋतव ऋतुभिर्यन्ति साधु ।
यथा न पूर्वमपरो जहात्येवा धातरायूंषि कल्पयैषाम् ॥ ५ ॥
आ रोहतायुर्जरसं वृणाना अनुपूर्वं यतमाना यति ष्ठ ।
इह त्वष्टा सुजनिमा सजोषा दीर्घमायुः करति जीवसे वः ॥ ६ ॥
इमा नारीरविधवाः सुपत्नीराञ्जनेन सर्पिषा सं विशन्तु ।
अनश्रवोऽनमीवाः सुरत्ना आ रोहन्तु जनयो योनिमग्रे ॥ ७ ॥
उदीर्ष्व नार्यभि जीवलोकं गतासुमेतमुप शेष एहि ।
हस्तग्राभस्य दिधिषोस्तवेदं पत्युर्जनित्वमभि सं बभूथ ॥ ८ ॥
धनुर्हस्तादाददानो मृतस्यास्मे क्षत्राय वर्चसे बलाय ।
अत्रैव त्वमिह वयं सुवीरा विश्वाः स्पृधो अभिमातीर्जयेम ॥ ९ ॥

---

८१ (१०.१८)

१. परा । इहि ॥ स्वः । देवऽयानात् ॥ चक्षुष्मते ॥ प्रऽजाम् । रिरिषः । मा । उत ॥ २. यत् । एत ॥ आऽप्यायमानाः । प्रऽजया ॥ ३. आ । अववृत्रन् ॥ अभूत् । देवऽहूतिः ॥ ४. परिऽधिम् ॥ मा । एषाम् ॥ ५. यथा । अहानि । अनुऽपूर्वम् ॥ यथा ॥ कल्पय । एषाम् ॥ ६. रोहत । आयुः ॥ स्थ ॥ सुऽजनिमा ॥ ७. सुऽपत्नीः । आऽअञ्जनेन ॥ सुऽरत्नाः ॥ ८. उत् । ईर्ष्व । जीवऽलोकम् ॥ गतऽअसुम् । शेषे । आ । इहि ॥ हस्तऽग्राभस्य ॥ जनिऽत्वम् ॥ ९. आऽददानः । मृतस्य ॥ अस्मे इति ॥ सुऽवीराः ॥ अभिऽमातीः ॥

उप॑ सर्प मा॒तरं॒ भूमि॑मे॒तामु॑रु॒व्यच॑सं पृथि॒वीं सु॒शेवा॑म् ।
ऊर्ण॑म्रदा युव॒तिर्दक्षि॑णावत ए॒षा त्वा॑ पातु॒ निर्ऋ॑ते॒रु॒पस्था॑त् ॥ १० ॥
उच्छ्व॑ञ्चस्व पृथिवि॒ मा नि बा॑धथाः सूपाय॒नास्मै॑ भव सूपवञ्च॒ना ।
मा॒ता पु॒त्रं यथा॑ सि॒चाभ्ये॑नं भूम ऊर्णुहि ॥ ११ ॥
उ॒च्छ्वञ्च॑माना पृ॒थि॒वी सु ति॑ष्ठतु स॒हस्रं॒ मित॒ उप॒ हि श्रय॑न्ताम् ।
ते गृ॒हासो॑ घृत॒श्चुतो॑ भवन्तु वि॒श्वाहा॑स्मै श॒र॒णाः स॒न्त्वत्र॑ ॥ १२ ॥
उत्ते॑ स्तभ्नामि पृथि॒वीं त्वत्परी॒मं लो॒गं नि॒दध॒न्मो अ॒हं रि॑षम् ।
ए॒तां स्थूणां॑ पि॒तरो॑ धारयन्तु॒ तेऽत्रा॑ य॒मः साद॑ना ते मिनोतु ॥ १३ ॥
प्र॒ती॒ची॒ने॒ मामह॒नीष्वाः॑ प॒र्णमि॒वा द॑धुः ।
प्रतीचीं॑ जग्रभा॒ वा॒च॒मश्वं॑ रश॒नया॑ यथा ॥ १४ ॥

## ८२ (१०.३४)

**१–१४ कवष ऐलूषः, अक्षो मौजवान् वा। १, ७, ९, १२ अक्षाः; १३ कृषिः; २–६, ८, १०, ११, १४ अक्षकितवनिन्दा। त्रिष्टुप्, ७ जगती।**

प्रा॒वे॒पा मा॑ बृह॒तो मा॑दयन्ति प्रवाते॒जा इरि॑णे॒ वर्वृ॑तानाः ।
सोम॑स्येव मौजव॒तस्य॑ भ॒क्षो वि॒भीद॑को॒ जागृ॑वि॒र्मह्य॑मच्छान् ॥ १ ॥
न मा॑ मिमेथ॒ न जि॑हीळ ए॒षा शि॒वा सखि॑भ्य उ॒त मह्य॑मासीत् ।
अ॒क्षस्या॒हमे॑कप॒रस्य॑ हे॒तोरनु॑व्रता॒मप॑ जा॒याम॑रोधम् ॥ २ ॥
द्वेष्टि॑ श्व॒श्रूरप॑ जा॒या रु॑णद्धि॒ न ना॑थि॒तो वि॑न्दते मर्डि॒तार॑म् ।
अश्व॑स्येव॒ जर॑तो॒ वस्न्य॑स्य॒ नाहं वि॑न्दामि कित॒वस्य॒ भोग॑म् ॥ ३ ॥

---

१०. उ॒रु॒ऽव्यच॑सम् । सु॒ऽशेवा॑म् ॥ ऊर्ण॑ऽम्रदाः । दक्षि॑णाऽवते ॥ निःऽऋ॑तेः । उ॒पऽस्था॑त् ॥
११. उत् । श्व॒ञ्च॒स्व । सु॒ऽउ॒पा॒य॒ना । अ॒स्मै॒ । सु॒ऽउ॒प॒व॒ञ्च॒ना ॥ सि॒चा । अ॒भि ॥ भू॒मे॒ ॥
१२. उ॒त्ऽश्वञ्च॑माना ॥ मितः॑ ॥ घृ॒तऽश्चु॑तः ॥ वि॒श्वाहा॑ । अ॒स्मै॒ ॥ स॒न्तु॒ । अत्र॑ ॥ १३. परि॑ । इ॒मम् ॥ नि॒ऽदध॑त् । मो इति॑ ॥ धा॒र॒य॒न्तु॒ । ते॒ ॥ अत्र॑ । सद॑ना ॥ १४. अह॑नि ॥ इष्वाः॑ । प॒र्णम्ऽइ॑व ॥ ज॒ग्र॒भ॒ ॥

८२ (१०.३४)

१. प्रा॒वे॒पाः ॥ प्र॒वा॒ते॒ऽजाः ॥ सोम॑स्यऽइव । मौ॒ज॒ऽव॒तस्य॑ ॥ वि॒ऽभीद॑कः ॥ २. जि॒ही॒ळे॒ ॥ एक॒ऽप॒रस्य॑ ॥ अनु॑ऽव्रताम् ॥ ३. अश्व॑स्यऽइव ॥

अन्ये जायां परि मृशन्त्यस्य यस्यागृधद्वेदने वाज्य१क्षः ।
पिता माता भ्रातर एनमाहुर्न जानीमो नयता बद्धमेतम् ॥ ४ ॥
यदादीध्ये न दविषाण्येभिः परायद्भ्योऽव हीये सखिभ्यः ।
न्युप्ताश्च बभ्रवो वाचमक्रतँ एमीदेषां निष्कृतं जारिणीव ॥ ५ ॥
सभामेति कितवः पृच्छमानो जेष्यामीति तन्वा३ शूशुजानः ।
अक्षासो अस्य वि तिरन्ति कामं प्रतिदीव्ने दधत आ कृतानि ॥ ६ ॥
अक्षास इदङ्कुशिनो नितोदिनो निकृत्वानस्तपनास्तापयिष्णवः ।
कुमारदेष्णा जयतः पुनर्हणो मध्वा संपृक्ताः कितवस्य बर्हणा ॥ ७ ॥
त्रिपञ्चाशः क्रीळति व्रात एषां देवइव सविता सत्यधर्मा ।
उग्रस्य चिन्मन्यवे ना नमन्ते राजा चिदेभ्यो नम इत्कृणोति ॥ ८ ॥
नीचा वर्तन्त उपरि स्फुरन्त्यहस्तासो हस्तवन्तं सहन्ते ।
दिव्या अङ्गारा इरिणे न्युप्ताः शीताः सन्तो हृदयं निर्दहन्ति ॥ ९ ॥
जाया तप्यते कितवस्य हीना माता पुत्रस्य चरतः क्व स्वित् ।
ऋणावा बिभ्यद्धनमिच्छमानोऽन्येषामस्तमुप नक्तमेति ॥१०॥
स्त्रियं दृष्ट्वाय कितवं ततापान्येषां जायां सुकृतं च योनिम् ।
पूर्वाह्णे अश्वान्युयुजे हि बभ्रून्त्सो अग्नेरन्ते वृषलः पपाद ॥ ११ ॥
यो वः सेनानीर्महतो गणस्य राजा व्रातस्य प्रथमो बभूव ।
तस्मै कृणोमि न धना रुणध्मि दशाहं प्राचीस्तदृतं वदामि ॥ १२ ॥
अक्षैर्मा दीव्यः कृषिमित्कृषस्व वित्ते रमस्व बहु मन्यमानः ।
तत्र गावः कितव तत्र जाया तन्मे वि चष्टे सवितायमर्यः ॥ १३ ॥
मित्रं कृणुध्वं खलु मृळता नो मा नो घोरेण चरताभि धृष्णु ।
नि वो नु मन्युर्विशतामरातिरन्यो बभ्रूणां प्रसितौ न्वस्तु ॥ १४ ॥

---

४. वाजी । अक्षः ॥ नयत ॥ ५. यत् । आऽदीध्ये ॥ निऽउप्ताः । अक्रत ॥ एमि । इत् । एषाम् । निःऽकृतम् । जारिणीऽइव ॥ ६. जेष्यामि । इति । तन्वा । शूशुजानः ॥ प्रतिऽदीव्ने ॥ ७. इत् । अङ्कुशिनः । निऽतोदिनः ॥ निऽकृत्वानः ॥ कुमारऽदेष्णाः । पुनःऽहनः ॥ सम्ऽपृक्ताः ॥ ८. त्रिऽपञ्चाशः । व्रातः ॥ देवःऽइव । सत्यऽधर्मा ॥ नमः ॥ ९. वर्तन्ते ॥ हस्तऽवन्तम् ॥ निः । दहन्ति ॥ १०. ऋणऽवा ॥ १२. सेनाऽनीः ॥ दश । अहम् ॥ १३. सविता । अयम् । अर्यः ॥ १४. मळत ॥ प्रऽसितौ ॥

## ८३ (१०.६८)

### १–१२ अयास्य आङ्गिरसः । बृहस्पतिः । त्रिष्टुप् ।

उदप्रुतो न वयो रक्षमाणा वावदतो अभ्रियस्येव घोषाः ।
गिरिभ्रजो नोर्मयो मदन्तो बृहस्पतिमभ्य१र्का अनावन् ॥ १ ॥
सं गोभिराङ्गिरसो नक्षमाणो भग इवेदर्यमणं निनाय ।
जने मित्रो न दंपती अनक्ति बृहस्पते वाजयाशूँरिवाजौ ॥ २ ॥
साध्वर्या अतिथिनीरिषिराः स्पार्हाः सुवर्णा अनवद्यरूपाः ।
बृहस्पतिः पर्वतेभ्यो वितूर्या निर्गा ऊपे यवमिव स्थिविभ्यः ॥ ३ ॥
आप्रुषायन्मधुन ऋतस्य योनिमवक्षिपन्नर्क उल्कामिव द्योः ।
बृहस्पतिरुद्धरन्नश्मनो गा भूम्या उद्नेव वि त्वचं बिभेद ॥ ४ ॥
अप ज्योतिषा तमो अन्तरिक्षादुद्नः शीपालमिव वात आजत् ।
बृहस्पतिरनुमृश्या वलस्याभ्रमिव वात आ चक्र आ गाः ॥ ५ ॥
यदा वलस्य पीयतो जसुं भेद्बृहस्पतिरग्नितपोभिरर्कैः ।
दद्भिर्न जिह्वा परिविष्टमाददाविर्निधीँरकृणोदुस्रियाणाम् ॥ ६ ॥
बृहस्पतिरमत हि त्यदासां नाम स्वरीणां सदने गुहा यत् ।
आण्डेव भित्त्वा शकुनस्य गर्भमुदुस्रियाः पर्वतस्य त्मनाजत् ॥ ७ ॥
अश्नापिनद्धं मधु पर्यपश्यन्मत्स्यं न दीन उदनि क्षियन्तम् ।
निष्टज्जभार चमसं न वृक्षाद्बृहस्पतिर्विरवेणा विकृत्य ॥ ८ ॥
सोषामविन्दत्स स्व१ः सो अग्निं सो अर्केण वि बबाधे तमांसि ।
बृहस्पतिर्गोवपुषो वलस्य निर्मज्जानं न पर्वणो जभार ॥ ९ ॥

---

८३ (१०.६८)

१. उदऽप्रुतः ॥ अभ्रियस्यऽइव ॥ गिरिऽभ्रजः ॥ अभि । अर्काः ॥ २. भगःऽइव ॥ दंपती इति दम्ऽपती ॥ आशून्ऽइव ॥ ३. साधुऽअर्याः ॥ सुऽवर्णाः । अनवद्यऽरूपाः ॥ विऽतूर्य ॥ निः । गाः । यवम्ऽइव । स्थिविऽभ्यः ॥ ४. आऽप्रुषायन् । मधुना ॥ अवऽक्षिपन् । उल्काम्ऽइव ॥ गाः ॥ उद्नाऽइव । ५. शीपालम्ऽइव ॥ अनुऽमृश्य ॥ अभ्रम्ऽइव । वातः । आ । चक्रे ॥ ६. बृहस्पतिः । अग्नितपःऽभिः ॥ दत्ऽभिः । परिऽविष्टम् । आदत् । आविः ॥ निऽधीन् ॥ ७. आण्डाऽइव । त्मना । आजत् ॥ ८. अपिऽनद्धम् । परि । अपश्यत् ॥ दीने ॥ निः । तत् ॥ विऽरवेण । विऽकृत्य ॥ ९. सः । उषाम् । स्व१रिति स्वः । सः ॥ गोऽवपुषः ॥ निः । मज्जानम् ॥

हिमेव पर्णा मुषिता वनानि बृहस्पतिनाकृपयद्वलो गाः।
अनानुकृत्यमपुनश्चकार यात्सूर्यामासा मिथ उच्चरातः ॥ १० ॥
अभि श्यावं न कृशनेभिरश्वं नक्षत्रेभिः पितरो द्यामपिंशन्।
रात्र्यां तमो अदधुर्ज्योतिरहन्बृहस्पतिर्भिनदद्रिं विदद्गाः ॥ ११ ॥
इदमकर्म नमो अभ्रियाय यः पूर्वीरन्वानोनवीति।
बृहस्पतिः स हि गोभिः सो अश्वैः स वीरेभिः स नृभिर्नो वयो धात् ॥ १२ ॥

## ८४ (१०.७२)

**१–९ बृहस्पतिर्लौक्यः, बृहस्पतिराङ्गिरसो वा, अदितिर्दाक्षायणी वा। देवाः। अनुष्टुप्।**

देवानां नु वयं जाना प्र वोचाम विपन्यया।
उक्थेषु शस्यमानेषु यः पश्यादुत्तरे युगे ॥ १ ॥
ब्रह्मणस्पतिरेता सं कर्मारइवाधमत्।
देवानां पूर्व्ये युगेऽसतः सदजायत ॥ २ ॥
देवानां युगे प्रथमेऽसतः सदजायत।
तदाशा अन्वजायन्त तदुत्तानपदस्परि ॥ ३ ॥
भूर्जज्ञ उत्तानपदो भुव आशा अजायन्त।
अदितेर्दक्षो अजायत दक्षाद्वदितिः परि ॥ ४ ॥
अदितिर्ह्यजनिष्ट दक्ष या दुहिता तव।
तां देवा अन्वजायन्त भद्रा अमृतबन्धवः ॥ ५ ॥
यद्देवा अदः सलिले सुसंरब्धा अतिष्ठत।
अत्रा वो नृत्यतामिव तीव्रो रेणुरपायत ॥ ६ ॥
यद्देवा यतयो यथा भुवनान्यपिन्वत।
अत्रा समुद्र आ गूळ्हमा सूर्यमजभर्तन ॥ ७ ॥

---

१०. हिमाऽइव ॥ अननुकृत्यम्। अपुनरिति ॥ सूर्यामासा। उत्ऽचरातः ॥ १२. अनु। आऽनोनवीति ॥

८४ (१०.७२)

१. उत्ऽतरे ॥ २. ब्रह्मणः। पतिः ॥ कर्मारःऽइव। अधमत् ॥ ३. अनु। अजायन्त ॥ उत्तानऽपदः ॥ ४. भूः। जज्ञे ॥ दक्षात्। ऊँ इति ॥ ५. अनु। अजायन्त ॥ अमृतऽबन्धवः ॥ ६. सुऽसंरब्धाः ॥ नृत्यताम्ऽइव ॥ अप। आयत ॥ ७. अत्र। समुद्रे ॥ अजभर्तन ॥

अष्टौ पुत्रासो अदितेर्ये जातास्तन्व१स्परि ।
देवाँ उप प्रैत्सप्तभिः परा मार्ताण्डमास्यत् ॥ ८ ॥
सप्तभिः पुत्रैरदितिरुप प्रैत्पूर्व्यं युगम् ।
प्रजायै मृत्यवे त्वत्पुनर्मार्ताण्डमाभरत् ॥ ९ ॥

## ८५ (१०.७८)

**१–८ स्यूमरश्मिर्भार्गवः । मरुतः । त्रिष्टुप्, २, ५–७ जगती ।**

विप्रासो न मन्मभिः स्वाध्यो देवाव्यो३ न यज्ञैः स्वप्नसः ।
राजानो न चित्राः सुसंदृशः क्षितीनां न मर्या अरेपसः ॥ १ ॥
अग्निर्न ये भ्राजसा रुक्मवक्षसो वातासो न स्वयुजः सद्यऊतयः ।
प्रज्ञातारो न ज्येष्ठाः सुनीतयः सुशर्माणो न सोमा ऋतं यते ॥ २ ॥
वातासो न ये धुनयो जिगत्नवोऽग्नीनां न जिह्वा विरोकिणः ।
वर्मण्वन्तो न योधाः शिमीवन्तः पितॄणां न शंसाः सुरातयः ॥ ३ ॥
रथानां न ये१राः सनाभयो जिगीवांसो न शूरा अभिद्यवः ।
वरेयवो न मर्या घृतप्रुषोऽभिस्वर्तारो अर्कं न सुष्टुभः ॥ ४ ॥
अश्वासो न ये ज्येष्ठास आशवो दिधिषवो न रथ्यः सुदानवः ।
आपो न निम्नैरुदभिर्जिगत्नवो विश्वरूपा अङ्गिरसो न सामभिः ॥ ५ ॥
ग्रावाणो न सूरयः सिन्धुमातर आदर्दिरासो अद्रयो न विश्वहा ।
शिशूला न क्रीळयः सुमातरो महाग्रामो न यामन्नुत त्विषा ॥ ६ ॥
उषसां न केतवोऽध्वरश्रियः शुभंयवो नाञ्जिभिर्व्यश्वितन् ।
सिन्धवो न ययियो भ्राजदृष्टयः परावतो न योजनानि ममिरे ॥ ७ ॥

---

८. तन्वः । परि ॥ प्र । ऐत् ॥ आस्यत् ॥ ९. प्रऽजायै ॥ आ । अभरत् ॥

८५ (१०.७८)

१. सुऽआध्यः ॥ देवऽअव्यः । न । सुऽअप्नसः ॥ सुऽसंदृशः ॥ २. रुक्मऽवक्षसः ॥ स्वऽयुजः । सद्यःऽऊतयः ॥ प्रऽज्ञातारः । सुऽनीतयः ॥ सुऽशर्माणः ॥ ३. जिह्वाः ॥ विऽरोकिणः ॥ वर्मण्ऽवन्तः । शिमीऽवन्तः ॥ सुऽरातयः ॥ ४. ये । अराः । सऽनाभयः ॥ अभिऽद्यवः ॥ वरेऽयवः । मर्याः । घृतऽप्रुषः ॥ अभिऽस्वर्तारः । सुऽस्तुभः ॥ ५. उदऽभिः ॥ विश्वऽरूपाः ॥ ६. सिन्धुऽमातरः ॥ आऽदर्दिरासः ॥ सुऽमातरः । महाऽग्रामः ॥ ७. अध्वरऽश्रियः ॥ शुभम्ऽयवः । अञ्जिऽभिः । वि । अश्वितन् ॥ भ्राजत्ऽऋष्टयः ।

सुभागान्नो देवाः कृणुता सुरत्नानस्मान्त्स्तोतॄन्मरुतो वावृधानाः ।
अधि स्तोत्रस्य सख्यस्य गात सनाद्धि वो रत्नधेयानि सन्ति ॥ ८ ॥

## ८६ (१०.९०)

### १-१६ नारायणः । पुरुषः । अनुष्टुप्, १६ त्रिष्टुप् ।

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
स भूमिं विश्वतो वृत्वात्यतिष्ठद्दशाङ्गुलम् ॥ १ ॥
पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम् ।
उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥ २ ॥
एतावानस्य महिमातो ज्यायाँश्च पूरुषः ।
पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ॥ ३ ॥
त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवत् पुनः ।
ततो विष्वङ् व्यक्रामत्साशनानशने अभि ॥ ४ ॥
तस्माद्विराळजायत विराजो अधि पूरुषः ।
स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः ॥ ५ ॥
यत्पुरुषेण हविषा देवा यज्ञमतन्वत ।
वसन्तो अस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः ॥ ६ ॥
तं यज्ञं बर्हिषि प्रौक्षन्पुरुषं जातमग्रतः ।
तेन देवा अयजन्त साध्या ऋषयश्च ये ॥ ७ ॥
तस्माद्यज्ञात्सर्वहुतः संभृतं पृषदाज्यम् ।
पशून्ताँश्चक्रे वायव्यानारण्यान्ग्राम्याश्च ये ॥ ८ ॥

---

८. सुऽभागान् । नः । कृणुत । सुऽरत्नान् ॥ ववृधानाः ॥ रत्नऽधेयानि ॥

८६ (१०.९०)

१. सहस्रऽशीर्षा ॥ सहस्रऽअक्षः । सहस्रऽपात् ॥ अति । अतिष्ठत् । दशऽअङ्गुलम् ॥ २. एव । इदम् ॥ अमृतऽत्वस्य । ईशानः ॥ अतिऽरोहति ॥ ३. पुरुषः ॥ त्रिऽपात् ॥ ४. अभवत् ॥ वि । अक्रामत् । साशनानशने इति ॥ ५. विऽराट् ॥ पुरुषः ॥ अति । अरिच्यत ॥ ६. ग्रीष्मः ॥ ७. प्र । औक्षन् ॥ ८. सर्वऽहुतः ॥ समऽभृतम् । पृषत्ऽआज्यम् ॥

तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे ।
छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥ ९ ॥
तस्मादश्वा अजायन्त ये के चोभयादतः ।
गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः ॥१०॥
यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन् ।
मुखं किमस्य कौ बाहू का ऊरू पादा उच्येते ॥११॥
ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः ।
ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत ॥१२॥
चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत ।
मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत ॥१३॥
नाभ्या आसीदन्तरिक्षं शीर्ष्णो द्यौः समवर्तत ।
पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँ अकल्पयन् ॥१४॥
सप्तास्यासन्परिधयस्त्रिः सप्त समिधः कृताः ।
देवा यद्यज्ञं तन्वाना अबध्नन्पुरुषं पशुम् ॥१५॥
यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् ।
ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ॥१६॥

## ८७ (१०.९७)

### १–२३ भिषगाथर्वणः । ओषधयः । अनुष्टुप् ।

या ओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा ।
मनै नु बभ्रूणामहं शतं धामानि सप्त च ॥ १ ॥
शतं वो अम्ब धामानि सहस्रमुत वो रुहः ।
अधा शतक्रत्वो यूयमिमं मे अगदं कृत ॥ २ ॥
ओषधीः प्रति मोदध्वं पुष्पवतीः प्रसूवरीः ।
अश्वाइव सजित्वरीर्वीरुधः पारयिष्णवः ॥ ३ ॥

---

१०. उभयादतः ॥ ११. वि । अदधुः ॥ वि । अकल्पयन् ॥ कौ । ऊरू इति । पादौ ॥ १२. ब्राह्मणः । अस्य ॥ पत्ऽभ्याम् ॥ १४. सम् । अवर्तत ॥ १५. सप्त । अस्य । आसन् । परिऽधयः ॥ समऽइधः ॥ १६. प्रथमानि । आसन् ॥

८७ (१०.९७)

१. त्रिऽयुगम् ॥ २. अध । शतऽक्रत्वः ॥ ३. पुष्पऽवतीः । प्रऽसूवरीः ॥ अश्वाःऽइव । सऽजित्वरीः ॥

ओषधीरिति मातरस्तद्वो देवीरुप ब्रुवे ।
सनेयमश्वं गां वास आत्मानं तव पूरुष ॥ ४ ॥
अश्वत्थे वो निषदनं पर्णे वो वसतिष्कृता ।
गोभाज इत्किलासथ यत्सनवथ पूरुषम् ॥ ५ ॥
यत्रौषधीः समग्मत राजानः समिताविव ।
विप्रः स उच्यते भिषग्रक्षोहामीवचातनः ॥ ६ ॥
अश्वावतीं सोमावतीमूर्जयन्तीमुदोजसम् ।
अवित्सि सर्वा ओषधीरस्मा अरिष्टतातये ॥ ७ ॥
उच्छुष्मा ओषधीनां गावो गोष्ठादिवेरते ।
धनं सनिष्यन्तीनामात्मानं तव पूरुष ॥ ८ ॥
इष्कृतिर्नाम वो माताथो यूयं स्थ निष्कृतीः ।
सीराः पतत्रिणीः स्थन यदामयति निष्कृथ ॥ ९ ॥
अति विश्वाः परिष्ठाः स्तेनइव व्रजमक्रमुः ।
ओषधीः प्राचुच्यवुर्यत्किं च तन्वो३ रपः ॥१०॥
यदिमा वाजयन्नहमोषधीर्हस्त आदधे ।
आत्मा यक्ष्मस्य नश्यति पुरा जीवगृभो यथा ॥११॥
यस्यौषधीः प्रसर्पथाङ्गमङ्गं परुष्परुः ।
ततो यक्ष्मं वि बाधध्व उग्रो मध्यमशीरिव ॥१२॥
साकं यक्ष्म प्र पत चाषेण किकिदीविना ।
साकं वातस्य ध्राज्या साकं नश्य निहाकया ॥१३॥
अन्या वो अन्यामवत्वन्यान्यस्या उपावत ।
ताः सर्वाः संविदाना इदं मे प्रावता वचः ॥१४॥

---

४. वासः ॥ पुरुष ॥ ५. निऽसदनम् ॥ वसतिः । कृता ॥ गोऽभाजः । किल । असथ ॥ पुरुषम् ॥ ६. यत्र । ओषधीः । सम्ऽअग्मत ॥ समितौऽइव ॥ रक्षःऽहा । अमीवऽचातनः ॥ ७. अश्वऽवतीम् । सोमऽवतीम् ॥ उत्ऽओजसम् ॥ आ । अवित्सि ॥ अरिष्टऽतातये ॥ ८. उत् । शुष्माः ॥ गोस्थात्ऽइव । पुरुष ॥ ९. निःऽकृतीः ॥ निः । कृथ ॥ १०. परिऽस्थाः ॥ स्तेनःऽइव ॥ प्र । अचुच्यवुः ॥ तन्वः । रपः ॥ ११. हस्ते । आऽदधे ॥ जीवऽगृभः ॥ १२. यस्य । ओषधीः । प्रऽसर्पथ ॥ अङ्गम्ऽअङ्गम् । परुःऽपरुः ॥ मध्यमशीःऽइव ॥ १३. किकिदीविना ॥ निऽहाकया ॥ १४. उप । अवत ॥ सम्ऽविदानाः ॥ प्र । अवत ॥

या: फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः ।
बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वंहसः ॥१५॥
मुञ्चन्तु मा शपथ्या३दथो वरुण्यादुत ।
अथो यमस्य पड्बीशात्सर्वस्माद्देवकिल्बिषात् ॥१६॥
अवपतन्तीरवदन्दिव ओषधयस्परि ।
यं जीवमश्नवामहै न स रिष्याति पूरुषः ॥१७॥
या ओषधीः सोमराज्ञीर्बह्वीः शतविचक्षणाः ।
तासां त्वमस्युत्तमारं कामाय शं हृदे ॥१८॥
या ओषधीः सोमराज्ञीर्विष्ठिताः पृथिवीमनु ।
बृहस्पतिप्रसूता अस्यै सं दत्त वीर्यम् ॥१९॥
मा वो रिषत्खनिता यस्मै चाहं खनामि वः ।
द्विपच्चतुष्पदस्माकं सर्वमस्त्वनातुरम् ॥२०॥
याश्चेदमुपशृण्वन्ति याश्च दूरं परागताः ।
सर्वाः संगत्य वीरुधोऽस्यै सं दत्त वीर्यम् ॥२१॥
ओषधयः सं वदन्ते सोमेन सह राज्ञा ।
यस्मै कृणोति ब्राह्मणस्तं राजन्पारयामसि ॥२२॥
त्वमुत्तमास्योषधे तव वृक्षा उपस्तयः ।
उपस्तिरस्तु सो३ऽस्माकं यो अस्माँ अभिदासति ॥२३॥

## ८८ (१०.१०८)

**(१–११) १, ३, ५, ७, ९ पणयोऽसुराः । सरमा देवता । २, ४, ६, ८, १०–११ सरमा देवशुनी ऋषिका । पणयो देवता । त्रिष्टुप् ।**

किमिच्छन्ती सरमा प्रेदमानड् दूरे ह्यध्वा जगुरिः पराचैः ।
कास्मेहितिः का परितक्म्यासीत्कथं रसाया अतरः पयांसि ॥ १ ॥

---

१५. बृहस्पतिऽप्रसूताः ॥ १६. शपथ्यात् । अथो इति ॥ पड्बीशात् ॥ देवऽकिल्बिषात् ॥ १७. अवऽपतन्तीः ॥ पुरुषः ॥ १८. सोमऽराज्ञीः ॥ शतऽविचक्षणाः ॥ उत्ऽतमा ॥ १९. विऽस्थिताः ॥ २१. उपऽशृण्वन्ति ॥ पराऽगताः ॥ सम्ऽगत्य ॥ २३. उत्ऽतमा । असि । ओषधे ॥ सः । अस्माकम् ॥ अभिऽदासति ॥

८८ (१०.१०८)

१. प्र । इदम् ॥ अस्मेऽहितिः । परिऽतक्म्या ॥

इन्द्रस्य दूतीरिषिता चरामि मह इच्छन्ती पणयो निधीन्वः ।
अतिष्कदो भियसा तन्न आवत्तथा रसाया अतरं पयांसि ॥ २ ॥
कीदृङ्ङिन्द्रः सरमे का दृशीका यस्येदं दूतीरसरः पराकात् ।
आ च गच्छान्मित्रमेना दधामाथा गवां गोपतिर्नो भवाति ॥ ३ ॥
नाहं तं वेद दभ्यं दभत्स यस्येदं दूतीरसरं पराकात् ।
न तं गूहन्ति स्रवतो गभीरा हता इन्द्रेण पणयः शयध्वे ॥ ४ ॥
इमा गावः सरमे या ऐच्छः परि दिवो अन्तान्सुभगे पतन्ती ।
कस्त एना अव सृजादयुध्व्युतास्माकमायुधा सन्ति तिग्मा ॥ ५ ॥
असेन्या वः पणयो वचांस्यनिषव्यास्तन्वः सन्तु पापीः ।
अधृष्टो व एतवा अस्तु पन्था बृहस्पतिर्व उभया न मृळात् ॥ ६ ॥
अयं निधिः सरमे अद्रिबुध्नो गोभिरश्वेभिर्वसुभिन्यृष्टः ।
रक्षन्ति तं पणयो ये सुगोपा रेकु पदमलकमा जगन्थ ॥ ७ ॥
एह गमन्नृषयः सोमशिता अयास्यो अङ्गिरसो नवग्वाः ।
त एतमूर्वं वि भजन्त गोनामथैतद्वचः पणयो वमन्नित् ॥ ८ ॥
एवा च त्वं सरम आजगन्थ प्रबाधिता सहसा दैव्येन ।
स्वसारं त्वा कृणवै मा पुनर्गा अप ते गवां सुभगे भजाम ॥ ९ ॥
नाहं वेद भ्रातृत्वं नो स्वसृत्वमिन्द्रो विदुरङ्गिरसश्च घोराः ।
गोकामा मे अच्छदयन्यदायमपात इत पणयो वरीयः ॥१०॥
दूरमित पणयो वरीय उद्गावो यन्तु मिनतीर्ऋतेन ।
बृहस्पतिर्या अविन्दन्निगूळ्हाः सोमो ग्रावाण ऋषयश्च विप्राः ॥११॥

## ८९ (१०.११७)

**१–९ भिक्षुराङ्गिरसः । धनान्नदानम् । त्रिष्टुप, १–२ जगती ।**

न वा उ देवाः क्षुधमिद्वधं ददुरुताशितमुप गच्छन्ति मृत्यवः ।
उतो रयिः पृणतो नोप दस्यत्युतापृणन्मर्डितारं न विन्दते ॥ १ ॥

---

२. महः । निऽधीन् ॥ अतिऽस्कदः ॥ ३. मित्रम् । एन ॥ अथ । गोऽपतिः ॥ ४. न । अहम् ॥ ५. ऐच्छः ॥ एनाः ॥ ६. एतवै ॥ बृहस्पतिः ॥ ७. निऽधिः । अद्रिऽबुध्नः ॥ निऽऋष्टः ॥ सुऽगोपाः ॥ ८. आ । इह । सोमऽशिताः ॥ नवऽग्वाः ॥ ९. एव । सरमे । आऽजगन्थ ॥ प्रऽबाधिता ॥ १०. भ्रातृऽत्वम् । स्वसृऽत्वम् ॥ गोऽकामाः । यत् । आयम् ॥ अप । अतः ॥ ११. निऽगूळ्हाः ॥

य आध्राय॑ चकमा॒नाय॑ पि॒त्वोऽन्न॑वान्त्सन्र॒फि॒तायो॑पज॒ग्मुषे॑ ।
स्थि॒रं मन॑: कृणु॒ते सेव॑ते पु॒रोतो चि॒त्स म॑र्डि॒तारं॑ न वि॑न्दते ॥ २ ॥
स इद्भो॒जो यो गृ॒हवे॑ द॒दा॒त्यन्न॑कामाय॒ चर॑ते कृ॒शाय॑ ।
अर॑मस्मै भवति॒ याम॑हूता उ॒ताप॒रीषु॑ कृणु॒ते सखा॑यम् ॥ ३ ॥
न स सखा॒ यो न द॒दा॑ति॒ सख्ये॑ स॒चाभुवे॑ सच॑मानाय पि॒त्वः ।
अपा॑स्मा॒त्प्रेया॒न्न तदोको॑ अस्ति पृ॒णन्त॑म॒न्यमर॑णं चिदिच्छेत् ॥ ४ ॥
पृ॒णी॒यादिन्नाध॑मानाय॒ तव्या॒न्द्राघी॑यांस॒मनु॑ पश्येत॒ पन्था॑म् ।
ओ हि॒ वर्त॑न्ते॒ रथ्ये॑व च॒क्रान्यम॑न्य॒मुप॑ तिष्ठन्त॒ राय॑: ॥ ५ ॥
मोघ॒मन्नं॑ विन्दते॒ अप्र॑चेताः स॒त्यं ब्र॑वीमि व॒ध इत्स तस्य॑ ।
नार्य॒मणं॑ पुष्य॑ति॒ नो सखा॑यं॒ केव॑लाघो भवति केवल॒ादी ॥ ६ ॥
कृ॒षन्नित्फाल॒ आशि॑तं कृणोति॒ यन्नध्वा॑न॒मप॑ वृङ्क्ते च॒रित्रै॑: ।
वद॑न्ब्र॒ह्मावद॑तो॒ वनी॑यान्पृ॒णन्ना॒पिरपृ॑णन्तम॒भि ष्या॑त् ॥ ७ ॥
एक॑पा॒द्भूयो॑ द्वि॒पदो॒ वि च॑क्रमे द्वि॒पात्त्रि॒पाद॑म॒भ्येति॑ प॒श्चात् ।
चतु॑ष्पादेति द्वि॒पदा॑मभिस्व॒रे सं॒पश्य॑न्प॒ङ्क्तीरु॑प॒तिष्ठ॑मानः ॥ ८ ॥
स॒मौ चि॒द्धस्तौ॒ न स॒मं वि॑विष्टः संमा॒तरा॑ चि॒न्न स॒मं दु॑हाते ।
य॒मयो॑श्चि॒न्न स॒मा वी॒र्या॑णि ज्ञा॒ती चि॒त्सन्तौ॒ न स॒मं पृ॑णीतः ॥ ९ ॥

## ९० (१०.११९)

### १–१३ लब ऐन्द्रः। आत्मा (इन्द्रः)। गायत्री।

इति॒ वा इति॑ मे॒ मनो॒ गामश्वं॑ सनुया॒मिति॑ । कु॒वित्सोम॒स्यापा॒मिति॑ ॥ १ ॥
प्र वाता॑इव॒ दोध॑त॒ उन्मा॑ पी॒ता अ॑यंसत । कु॒वित्सोम॒स्यापा॒मिति॑ ॥ २ ॥
उन्मा॑ पी॒ता अ॑यंसत॒ रथ॒मश्वा॑इवा॒शव॑: । कु॒वित्सोम॒स्यापा॒मिति॑ ॥ ३ ॥

---

८९ (१०.११७)

२. अन्न॑ऽवान् । उप॒ऽज॒ग्मुषे॑ ॥ पु॒रा । उ॒तो इति॑ । ३. अन्न॑ऽकामाय ॥ याम॑ऽहूतौ ॥ ४. स॒चा॒ऽभुवे॑ ॥ अप॑ । अ॒स्मा॒त् । प्र । इ॒या॒त् ॥ अ॒न्यम् । अर॑णम् ॥ ५. ओ इति॑ । रथ्या॑ऽइव ॥ अ॒न्यम्ऽअ॑न्यम् ॥ ६. अप्र॑ऽचेताः ॥ केव॑लऽअघः । के॒व॒ल॒ऽआ॒दी ॥ ७. अ॒भि । स्या॒त् ॥ ८. एक॑ऽपात् ॥ अ॒भि । ए॒ति॒ ॥ अ॒भि॒ऽस्व॒रे ॥ स॒म्ऽपश्य॑न् । उ॒प॒ऽतिष्ठ॑मानः ॥ ९. स॒म्ऽमा॒तरा॑ ॥ वी॒र्या॑णि ॥ ज्ञा॒ती इति॑ ॥

९० (१०.११९)

१. अपा॑म् । इति॑ । २. वाता॑ःऽइव ॥ ३. अश्वा॑ःऽइव ॥

उप॑ मा म॒तिर॑स्थित वा॒श्रा पु॒त्रमि॑व प्रि॒यम् । कु॒वित्सोम॒स्यापा॒मिति॑ ॥ ४ ॥
अ॒हं तष्टे॑व व॒न्धुरं॒ पर्य॑चामि हृ॒दा म॒तिम् । कु॒वित्सोम॒स्यापा॒मिति॑ ॥ ५ ॥
न॒हि मे॑ अक्षि॒पच्च॒नाच्छा॑न्त्सु॒ः पञ्च॑ कृ॒ष्टय॑ः । कु॒वित्सोम॒स्यापा॒मिति॑ ॥ ६ ॥
न॒हि मे॒ रोद॑सी उ॒भे अ॒न्यं प॒क्षं च॒न प्रति॑ । कु॒वित्सोम॒स्यापा॒मिति॑ ॥ ७ ॥
अ॒भि द्यां म॑हि॒ना भु॑वम॒भी॒३॒॑मां पृ॑थि॒वीं म॒हीम् । कु॒वित्सोम॒स्यापा॒मिति॑ ॥ ८ ॥
ह॒न्ता॒हं पृ॑थि॒वीमि॒मां नि द॑धानी॒ह वे॒ह वा॑ । कु॒वित्सोम॒स्यापा॒मिति॑ ॥ ९ ॥
ओ॒षमित्पृ॑थि॒वीम॒हं ज॒ङ्घना॑नी॒ह वे॒ह वा॑ । कु॒वित्सोम॒स्यापा॒मिति॑ ॥१०॥
दि॒वि मे॑ अ॒न्यः प॒क्षो॒३॒॑धो अ॒न्यम॑चीकृषम् । कु॒वित्सोम॒स्यापा॒मिति॑ ॥११॥
अ॒हम॑स्मि महाम॒हो॑ऽभिन॒भ्यमु॒दी॑षितः । कु॒वित्सोम॒स्यापा॒मिति॑ ॥१२॥
गृ॒हो या॒म्यर॑ङ्कृतो दे॒वेभ्यो॑ हव्य॒वाह॑नः । कु॒वित्सोम॒स्यापा॒मिति॑ ॥१३॥

## ९१ (१०.१२१)

### १–१० हिरण्यगर्भः प्राजापत्यः । कः (प्रजापतिः) । त्रिष्टुप् ।

हि॒र॒ण्य॒ग॒र्भः सम॑वर्त॒ताग्रे॑ भू॒तस्य॑ जा॒तः पति॒रेक॑ आसीत् ।
स दा॑धार पृथि॒वीं द्यामु॒तेमां कस्मै॑ दे॒वाय॑ ह॒विषा॑ विधेम ॥ १ ॥
य आ॑त्म॒दा ब॑ल॒दा यस्य॒ विश्व॑ उ॒पास॑ते प्र॒शिषं॒ यस्य॑ दे॒वाः ।
यस्य॑ छा॒याऽमृतं॒ यस्य॑ मृ॒त्युः कस्मै॑ दे॒वाय॑ ह॒विषा॑ विधेम ॥ २ ॥
यः प्रा॑ण॒तो नि॑मिष॒तो म॑हि॒त्वैक॒ इद्राजा॒ जग॑तो ब॒भूव॑ ।
य ईशे॑ अ॒स्य द्वि॒पद॒श्चतु॑ष्पदः॒ कस्मै॑ दे॒वाय॑ ह॒विषा॑ विधेम ॥ ३ ॥
यस्ये॒मे हि॒मव॑न्तो महि॒त्वा यस्य॑ समु॒द्रं र॒सया॑ स॒हाहुः ।
यस्ये॒माः प्र॒दिशो॒ यस्य॑ बा॒हू कस्मै॑ दे॒वाय॑ ह॒विषा॑ विधेम ॥ ४ ॥

---

४. पु॒त्रम्ऽइ॑व ॥ ५. तष्टा॑ऽइव ॥ परि॑ । अ॒चा॒मि॒ ॥ ६. अ॒क्षि॒ऽपत् । च॒न । अ॒च्छा॑न्त्सुः ॥
८. भु॒व॒म् ॥ अ॒भि । इ॒माम् ॥ ९. ह॒न्त॑ । अ॒हम् ॥ १०. ओ॒षम् ॥ ११. प॒क्षः । अ॒धः ॥
१२. म॒हा॒ऽम॒हः ॥ अ॒भि॒ऽन॒भ्यम् । उ॒त्ऽई॑षितः । १३. अर॑म्ऽकृतः ॥

९१ (१०.१२१)

१. हि॒र॒ण्य॒ऽग॒र्भः । सम् । अ॒व॒र्त॒त॒ । अग्रे॑ ॥ उ॒त । इ॒माम् ॥ २. आ॒त्म॒ऽदाः । ब॒ल॒ऽदाः । विश्वे॑ ॥ उ॒प॒ऽआस॑ते । प्र॒ऽशिष॑म् ॥ छा॒या । अ॒मृत॑म् ॥ ३. नि॒ऽमि॒ष॒तः । म॒हि॒ऽत्वा ॥ ४. हि॒मऽव॑न्तः ॥ स॒ह । आ॒हुः ॥ प्र॒ऽदिश॑ः ॥

येन द्यौरुग्रा पृथिवी च दृळ्हा येन स्वः स्तभितं येन नाकः ।
यो अन्तरिक्षे रजसो विमानः कस्मै देवाय हविषा विधेम ॥ ५ ॥
यं क्रन्दसी अवसा तस्तभाने अभ्यैक्षेतां मनसा रेजमाने ।
यत्राधि सूर उदितो विभाति कस्मै देवाय हविषा विधेम ॥ ६ ॥
आपो ह यद्बृहतीर्विश्वमायन्गर्भं दधाना जनयन्तीरग्निम् ।
ततो देवानां समवर्ततासुरेकः कस्मै देवाय हविषा विधेम ॥ ७ ॥
यश्चिदापो महिना पर्यपश्यद्दक्षं दधाना जनयन्तीर्यज्ञम् ।
यो देवेष्वधि देव एक आसीत्कस्मै देवाय हविषा विधेम ॥ ८ ॥
मा नो हिंसीज्जनिता यः पृथिव्या यो वा दिवं सत्यधर्मा जजान ।
यश्चापश्चन्द्रा बृहतीर्जजान कस्मै देवाय हविषा विधेम ॥ ९ ॥
प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव ।
यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम् ॥१०॥

## ९२ (१०.१२५)

**१–८ वागाम्भृणी । आत्मा । त्रिष्टुप्, २ जगती ।**

अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः ।
अहं मित्रावरुणोभा बिभर्म्यहमिन्द्राग्नी अहमश्विनोभा ॥ १ ॥
अहं सोममाहनसं बिभर्म्यहं त्वष्टारमुत पूषणं भगम् ।
अहं दधामि द्रविणं हविष्मते सुप्राव्ये३ यजमानाय सुन्वते ॥ २ ॥
अहं राष्ट्री संगमनी वसूनां चिकितुषी प्रथमा यज्ञियानाम् ।
तां मा देवा व्यदधुः पुरुत्रा भूरिस्थात्रां भूर्यावेशयन्तीम् ॥ ३ ॥
मया सो अन्नमत्ति यो विपश्यति यः प्राणिति य ईं शृणोत्युक्तम् ।
अमन्तवो मां त उप क्षियन्ति श्रुधि श्रुत श्रद्धिवं ते वदामि ॥ ४ ॥

---

५. विऽमानः ॥ ६. अभि । ऐक्षेताम् ॥ यत्र । अधि । उत्ऽइतः । विभाति ॥ ७. सम् । अवर्तत । असुः ॥ ८. परिऽअपश्यत् ॥ दधानाः ॥ देवेषु । अधि ॥ ९. सत्यऽधर्मा ॥ च । अपः ॥

९२ (१०.१२५)

१. विश्वऽदेवैः ॥ २. हविष्मते ॥ सुप्रऽअव्ये ॥ ३. सम्ऽगमनी ॥ वि । अदधुः । पुरुऽत्रा ॥ भूरिऽस्थात्राम् । भूरि । आऽवेशयन्तीम् ॥ ४. विऽपश्यति ॥ श्रद्धिऽवम् ॥

अहमेव स्वयमिदं वदामि जुष्टं देवेभिरुत मानुषेभिः ।
यं कामये तंतमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम् ॥ ५ ॥
अहं रुद्राय धनुरा तनोमि ब्रह्मद्विषे शरवे हन्तवा उं ।
अहं जनाय समदं कृणोम्यहं द्यावापृथिवी आ विवेश ॥ ६ ॥
अहं सुवे पितरमस्य मूर्धन्मम योनिरप्स्वन्तः समुद्रे ।
ततो वि तिष्ठे भुवनानु विश्वोतामूं द्यां वर्ष्मणोप स्पृशामि ॥ ७ ॥
अहमेव वातइव प्र वाम्यारभमाणा भुवनानि विश्वा ।
परो दिवा पर एना पृथिव्यैतावती महिना सं बभूव ॥ ८ ॥

## ९३ (१०.१२७)

**१–८ कुशिकः सौभरः, रात्रिर्वा भारद्वाजी । रात्रिः । गायत्री ।**

रात्री व्यख्यदायती पुरुत्रा देव्यक्षभिः । विश्वा अधि श्रियोऽधित ॥ १ ॥
ओर्वप्रा अमर्त्या निवतो देव्युद्वतः । ज्योतिषा बाधते तमः ॥ २ ॥
निरु स्वसारमस्कृतोषसं देव्यायती । अपेदु हासते तमः ॥ ३ ॥
सा नो अद्य यस्या वयं नि ते यामन्नविक्ष्महि । वृक्षे न वसतिं वयः ॥ ४ ॥
नि ग्रामासो अविक्षत नि पद्वन्तो नि पक्षिणः । नि श्येनासश्चिदर्थिनः ॥ ५ ॥
यावया वृक्यं वृकं यवय स्तेनमूर्म्ये । अथा नः सुतरा भव ॥ ६ ॥
उप मा पेपिशत्तमः कृष्णं व्यक्तमस्थित । उष ऋणेव यातय ॥ ७ ॥
उप ते गाइवाकरं वृणीष्व दुहितर्दिवः । रात्रि स्तोमं न जिग्युषे ॥ ८ ॥

---

५. तम्ऽतम् ॥ सुऽमेधाम् ॥ ६. ब्रह्मऽद्विषे । हन्तवै ॥ सऽमदम् ॥ ७. अप्ऽसु । अन्तरिति ॥ अमूम् । वर्ष्मणा । उप ॥ ८. वातःऽइव ॥ आऽरभमाणा ॥ पृथिव्या । एतावती ॥

९३ (१०.१२७)

१. वि । अख्यत् । आऽयती ॥ अक्षऽभिः ॥ २. आ । उरु । अप्राः ॥ निऽवतः । देवी । उत्ऽवतः ॥ ३. अकृत ॥ देवी । आऽयती ॥ अप । इत् ॥ ५. पत्ऽवन्तः ॥ ६. यवय । वृक्यम् । वृकम् ॥ अथ । सुऽतरा ॥ ७. विऽअक्तम् ॥ उषः । ऋणाऽइव ॥ ८. गाःऽइव । आ । अकरम् ॥ दुहितः । दिवः ॥

## ९४ (१०.१२९)

**१–७ प्रजापतिः परमेष्ठी। भाववृत्तम्। त्रिष्टुप्।**

नासदासीन्नो सदासीत्तदानीं नासीद्रजो नो व्योमा परो यत्।
किमावरीवः कुह कस्य शर्मन्नम्भः किमासीद्गहनं गभीरम् ॥ १ ॥
न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत्प्रकेतः।
आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किं चनास ॥ २ ॥
तम आसीत्तमसा गूळ्हमग्रेऽप्रकेतं सलिलं सर्वमा इदम्।
तुच्छ्येनाभ्वपिहितं यदासीत्तपसस्तन्महिनाजायतैकम् ॥ ३ ॥
कामस्तदग्रे समवर्तताधि मनसो रेतः प्रथमं यदासीत्।
सतो बन्धुमसति निरविन्दन्हृदि प्रतीष्या कवयो मनीषा ॥ ४ ॥
तिरश्चीनो विततो रश्मिरेषामधः स्विदासी३दुपरि स्विदासी३त्।
रेतोधा आसन्महिमान आसन्त्स्वधा अवस्तात्प्रयतिः परस्तात् ॥ ५ ॥
को अद्धा वेद क इह प्र वोचत्कुत आजाता कुत इयं विसृष्टिः।
अर्वाग्देवा अस्य विसर्जनेनाथा को वेद यत आबभूव ॥ ६ ॥
इयं विसृष्टिर्यत आबभूव यदि वा दधे यदि वा न।
यो अस्याध्यक्षः परमे व्योमन्त्सो अङ्ग वेद यदि वा न वेद ॥ ७ ॥

## ९५ (१०.१३५)

**१–७ कुमारो यामायनः। यमः। अनुष्टुप्।**

यस्मिन्वृक्षे सुपलाशे देवैः संपिबते यमः।
अत्रा नो विश्पतिः पिता पुराणाँ अनु वेनति ॥ १ ॥

---

९४ (१०.१२९)

१. विऽओम ॥ आ। अवरीवरिति ॥ २. प्रऽकेतः। चन। आस ॥ ३. अप्रऽकेतम्। सर्वम्। आः ॥ आभु। अपिऽहितम् ॥ महिना। अजायत। एकम् ॥ ४. सम्। अवर्तत। अधि ॥ निः। अविन्दन् ॥ प्रतिऽइष्य ॥ ५. विऽततः ॥ आसी३त् ॥ रेतःऽधाः ॥ प्रऽयतिः ॥ ६. आऽजाता। विऽसृष्टिः ॥ विऽसर्जनेन ॥ आऽबभूव ॥ ७. अस्य। अधिऽअक्षः। विऽओमन् ॥

९५ (१०.१३५)

१. सुऽपलाशे ॥ संऽपिबते ॥ अत्र। विश्पतिः ॥

पुराणाँ अनुवेनन्तं चरन्तं पापयामुया । असूयन्नभ्यचाकशं तस्मा अस्पृहयं पुनः ॥ २ ॥
यं कुमार नवं रथमचक्रं मनसाकृणोः । एकेषं विश्वतः प्राञ्चमपश्यन्नधि तिष्ठसि ॥ ३ ॥
यं कुमार प्रावर्तयो रथं विप्रेभ्यस्परि । तं सामानु प्रावर्तत समितो नाव्याहितम् ॥ ४ ॥
कः कुमारमजनयद्रथं को निरवर्तयत् । कः स्वित्तदद्य नो ब्रूयादनुदेयी यथाभवत् ॥ ५ ॥
यथाभवदनुदेयी ततो अग्रमजायत । पुरस्ताद्बुध्न आततः पश्चान्निरयणं कृतम् ॥ ६ ॥
इदं यमस्य सादनं देवमानं यदुच्यते ।
इयमस्य धम्यते नाळीरयं गीर्भिः परिष्कृतः ॥ ७ ॥

## ९६ (१०.१३९)

**१–६ विश्वावसुर्देवगन्धर्वः । सविता, ४–६ आत्मा । त्रिष्टुप् ।**

सूर्यरश्मिर्हरिकेशः पुरस्तात्सविता ज्योतिरुदयाँ अजस्रम् ।
तस्य पूषा प्रसवे याति विद्वान्त्संपश्यन्विश्वा भुवनानि गोपाः ॥ १ ॥
नृचक्षा एष दिवो मध्य आस्त आपप्रिवान्रोदसी अन्तरिक्षम् ।
स विश्वाचीरभि चष्टे घृताचीरन्तरा पूर्वमपरं च केतुम् ॥ २ ॥
रायो बुध्नः संगमनो वसूनां विश्वा रूपाभि चष्टे शचीभिः ।
देवइव सविता सत्यधर्मेन्द्रो न तस्थौ समरे धनानाम् ॥ ३ ॥
विश्वावसुं सोम गन्धर्वमापो ददृशुषीस्तदृतेना व्यायन् ।
तदन्ववैदिन्द्रो रारहाण आसां परि सूर्यस्य परिधीँरपश्यत् ॥ ४ ॥
विश्वावसुरभि तन्नो गृणातु दिव्यो गन्धर्वो रजसो विमानः ।
यद्वा घा सत्यमुत यन्न विद्म धियो हिन्वानो धिय इन्नो अव्याः ॥ ५ ॥

---

२. अनुऽवेनन्तम् ॥ पापया । अमुया ॥ अभि । अचाकशम् ॥ तस्मै ॥ ३. एकऽईषम् ॥ ४. प्र । अवर्तयः ॥ साम । अनु । प्र । अवर्तत ॥ सम् । इतः । नावि । आऽहितम् ॥ ५. निः । अवर्तयत् ॥ अनुऽदेयी । यथा । अभवत् ॥ ६. आऽततः ॥ निःऽअयनम् ॥ ७. सदनम् ॥ देवऽमानम् ॥ परिऽकृतः ॥

९६ (१०.१३९)

१. सूर्यऽरश्मिः । हरिऽकेशः ॥ उत् । अयान् ॥ प्रऽसवे ॥ सम्ऽपश्यन् ॥ २. आस्ते ॥ आपप्रिऽवान् ॥ ३. सम्ऽगमनः ॥ रूपा । अभि ॥ देवःऽइव । सत्यऽधर्मा ॥ सम्ऽअरे ॥ ४. विश्वऽवसुम् ॥ ऋतेन । वि । आयन् ॥ अनुऽअवैत् । ररहाणः ॥ परिऽधीन् ॥ ५. विऽमानः ।

सस्निमविन्दच्चरणे नदीनामपावृणोद्दुरो अश्मव्रजानाम् ।
प्रासां गन्धर्वो अमृतानि वोचदिन्द्रो दक्षं परि जानादहीनाम् ॥ ६ ॥

## ९७ (१०.१४६)

**१–६ देवमुनिरैरम्मदः । अरण्यानी । अनुष्टुप् ।**

अरण्यान्यरण्यान्यसौ या प्रेव नश्यसि ।
कथा ग्रामं न पृच्छसि न त्वा भीरिव विन्दतीँ३ ॥ १ ॥
वृषारवाय वदते यदुपावति चिच्चिकः ।
आघाटिभिरिव धावयन्नरण्यानिर्महीयते ॥ २ ॥
उत गावइवादन्त्युत वेश्मेव दृश्यते ।
उतो अरण्यानिः सायं शकटीरिव सर्जति ॥ ३ ॥
गामङ्गैष आ ह्वयति दार्वङ्गैषो अपावधीत् ।
वसन्नरण्यान्यां सायमक्रुक्षदिति मन्यते ॥ ४ ॥
न वा अरण्यानिर्हन्त्यन्यश्चेन्नाभिगच्छति ।
स्वादोः फलस्य जग्ध्वाय यथाकामं नि पद्यते ॥ ५ ॥
आञ्जनगन्धिं सुरभिं बह्वन्नामकृषीवलाम् ।
प्राहं मृगाणां मातरमरण्यानिमशंसिषम् ॥ ६ ॥

## ९८ (१०.१५१)

**१–५ श्रद्धा कामायनी । श्रद्धा । अनुष्टुप् ।**

श्रद्धयाग्निः समिध्यते श्रद्धया हूयते हविः ।
श्रद्धां भगस्य मूर्धनि वचसा वेदयामसि ॥ १ ॥

---

६. अप । अवृणोत् । अश्मऽव्रजानाम् ॥ प्र । आसाम् ॥

९७ (१०.१४६)

१. प्रऽइव ॥ भीःऽइव । विन्दती ३ँ ॥ २. वृषऽरवाय ॥ उपऽअवति ॥ आघाटिभिःऽइव ॥
३. गावःऽइव ॥ वेश्मऽइव ॥ शकटीःऽइव ॥ ४. अङ्ग । एषः ॥ दारु । अङ्ग । एषः ॥
५. अभिऽगच्छति ॥ यथाऽकामम् ॥ ६. आञ्जनऽगन्धिम् ॥ बहुऽअन्नाम् । अकृषिऽवलाम् ॥
प्र । अहम् ॥

९८ (१०.१५१)

१. सम् । इध्यते ॥ वचसा । आ ॥

प्रियं श्रद्धे ददतः प्रियं श्रद्धे दिदासतः ।
प्रियं भोजेषु यज्वस्विदं म उदितं कृधि ॥ २ ॥
यथा देवा असुरेषु श्रद्धामुग्रेषु चक्रिरे ।
एवं भोजेषु यज्वस्वस्माकमुदितं कृधि ॥ ३ ॥
श्रद्धां देवा यजमाना वायुगोपा उपासते ।
श्रद्धां हृदय्य१याकूत्या श्रद्धया विन्दते वसु ॥ ४ ॥
श्रद्धां प्रातर्हवामहे श्रद्धां मध्यंदिनं परि ।
श्रद्धां सूर्यस्य निम्रुचि श्रद्धे श्रद्धापयेह नः ॥ ५ ॥

## ९९ (१०.१५४)

### १–५ यमी वैवस्वती । भाववृत्तम् । अनुष्टुप् ।

सोम एकेभ्यः पवते घृतमेक उपासते ।
येभ्यो मधु प्रधावति ताँश्चिदेवापि गच्छतात् ॥ १ ॥
तपसा ये अनाधृष्यास्तपसा ये स्वर्ययुः ।
तपो ये चक्रिरे महस्ताँश्चिदेवापि गच्छतात् ॥ २ ॥
ये युध्यन्ते प्रधनेषु शूरासो ये तनूत्यजः ।
ये वा सहस्रदक्षिणास्ताँश्चिदेवापि गच्छतात् ॥ ३ ॥
ये चित्पूर्व ऋतसाप ऋतावान ऋतावृधः ।
पितॄन्तपस्वतो यम ताँश्चिदेवापि गच्छतात् ॥ ४ ॥
सहस्रणीथाः कवयो ये गोपायन्ति सूर्यम् ।
ऋषीन्तपस्वतो यम तपोजाँ अपि गच्छतात् ॥ ५ ॥

---

२. यज्वऽसु ॥ मे ॥ ४. वायुऽगोपाः । उप । आसते ॥ हृदय्यया । आऽकूत्या ॥ ५. निऽम्रुचि । श्रत् । धापय । इह ॥

९९ (१०.१५४)

१. एके । उप । आसते ॥ प्रऽधावति ॥ ३. प्रऽधनेषु ॥ तनूऽत्यजः ॥ सहस्रऽदक्षिणाः ॥ ४. ऋतऽसापः ॥ ऋतऽवानः । ऋतऽवृधः ॥ ५. सहस्रऽनीथाः ॥ तपःऽजान् ॥

## १०० (१०.१६८)

**१–४ अनिलो वातायनः। वायुः। त्रिष्टुप्।**

वार्तस्य नु मंहिमानं रथस्य रुजन्नेति स्तनयन्नस्य घोषः।
दिविस्पृग्यात्यरुणानि कृण्वन्नुतो एति पृथिव्या रेणुमस्यन् ॥ १ ॥
सं प्रेरते अनु वातस्य विष्ठा ऐनं गच्छन्ति समनं न योषाः।
ताभिः सयुक्सरथं देव ईयतेऽस्य विश्वस्य भुवनस्य राजा ॥ २ ॥
अन्तरिक्षे पथिभिरीयमानो न नि विशते कतमच्चनाहः।
अपां सखा प्रथमजा ऋतावा क्व स्विज्जातः कुत आ बभूव ॥ ३ ॥
आत्मा देवानां भुवनस्य गर्भो यथावशं चरति देव एषः।
घोषा इदस्य शृण्विरे न रूपं तस्मै वाताय हविषा विधेम ॥ ४ ॥

## १०१ (१०.१९१)

**१–४ संवनन आङ्गिरसः। १ अग्निः, २–४ संज्ञानम्। अनुष्टुप्, ३ त्रिष्टुप्।**

संसमिद्युवसे वृषन्नग्ने विश्वान्यर्य आ।
इळस्पदे समिध्यसे स नो वसून्या भर ॥ १ ॥
सं गच्छध्वं सं वदध्वं सं वो मनांसि जानताम्।
देवा भागं यथा पूर्वे संजानाना उपासते ॥ २ ॥
समानो मन्त्रः समितिः समानी समानं मनः सह चित्तमेषाम्।
समानं मन्त्रमभि मन्त्रये वः समानेन वो हविषा जुहोमि ॥ ३ ॥
समानी व आकूतिः समाना हृदयानि वः।
समानमस्तु वो मनो यथा वः सुसहासति ॥ ४ ॥

---

१०० (१०.१६८)

१. दिविऽस्पृक्॥ २. प्र। ईरते। विऽस्थाः॥ आ। एनम्॥ सऽयुक्। सऽरथम्॥ ३. चन। अहरिति॥ प्रथमऽजाः। ऋतऽवा॥ ४. यथाऽवशम्॥

१०१ (१०.१९)

१. सम्ऽसम्। इत्। युवसे॥ अर्यः। आ॥ इळः। पदे। सम्। इध्यसे॥ २. सम्ऽजानानाः। उपऽआसते॥ ३. सम्ऽइतिः॥ ४. आऽकूतिः॥ सुऽसह। असति॥

## 1 (I.1) *Agni*

(1) I praise Agni, the divine invoking priest of our sacrifice who is placed in the forefront and is the best bestower of lovely gifts.

(2) Agni deserves to be praised by the early sages as well as the modern ones. May he bring the gods here.

(3) May (our sacrificer) enjoy, day by day, through Agni, wealth and prosperity alone, both far-famed and most abounding in brave followers.

(4) That oblation, that sacrifice alone, which you surround on all sides, O Agni, reaches among the gods.

(5) May god Agni, the unfailing invoking priest having a poet's wisdom and possessed of most glorious fame, arrive together with the other gods.

(6) Whatever good indeed, you will do to your worshipper, O Agni, all that of yours alone is unfailing, O Aṅgiras.

(7) We approach you, day by day, O Agni, with a prayer, bringing you a respectful homage, O illuminator of the nights;

(8) you who are a ruler of sacrifices, a shining defender of Ṛta, growing strong in his own home.

---

## 1 (1.1) *Agni*

1. *ab:* see Vedic Index, under *puróhita* and *ṛtvíj*. *ratnadhātamam:* cf. 5.8.3*b;* 7.16.6*b*.
2. *ab:* Sages old and new: cf. 1.48.14; 4.20.5; 6.21.5; 7.29.4; 10.54.3; 10.98.9.
3. Supply *dāśvan* as the subject; see v. 6. *póṣam evá* i.e. unbroken prosperity.
4. *yajñám adhvarám:* cf. 6.10.1*b; yajñám* should be secondarily taken to mean 'sacrificial offering' as at 10.90.7*ab*. *paribhū́r ási*: 'you are an encompasser for protection'; cf. 1.97.6*b*; 2.2.5*b*; 3.3.10*d*; 5.13.6*b*. Also see 1.32.15*d*.
6. *satyám:* unfailing, reliable, see *Ṛgveda, Maṇḍala VII* Intro. p.VI. *aṅgiraḥ*: Agni, Bṛhaspati and Uṣas are said to be closely related to the semi-divine sages, the Aṅgirases (see 3.31.1-3) and hence often called by that name in the Ṛgveda. Even Indra and Soma are sometimes so called as Indra won Soma with their close co-operation.
7. *dóṣā-vastar:* This is vocative singular of *doṣā-vastṛ* 'illuminator of the night'; see 4.4.9 and Sāyaṇa on that word at 7.15.15 (*rātrer ācchādayitar; tamaso vārayitar ityarthaḥ*). Indra is called *kṣapā́m vastā́* 'illuminator of the nights' at 3.49.4c. At *Āśv. Śr. Sūtra* III. 12.4 Agni is invoked as *doṣāvastar* and *prātarvastar* i.e. 'illuminator of nights' and 'illuminator of mornings'.
8. Construe this stanza with *úpa émasi* in v.7. *své dáme:* see *Ṛgveda, Maṇḍala* VII on 1.2.

(9) Such as you are, O Agni, be easy of access to us like a father to his son; associate with us for our well-being.

2 (I.19) *Agni and Maruts*

(1) You are invited to that lovely sacrifice for a draught of (Soma mixed with) milk. Come with the Maruts, O Agni.

(2) No god nor mortal excels the wisdom of you, the great one. Come with the Maruts, O Agni.

(3) Come with the Maruts, O Agni, who are all guileless gods, well acquainted with the vast region (of the mid-air).

(4) Come with the Maruts, O Agni, the fierce ones who have sung a song and are unassailable owing to their might.

(5) Come with the Maruts, O Agni, who are brilliant, who possess formidable forms and great martial power, and are the devourers of their enemies.

(6) Come with the Maruts, O Agni, who as gods sit in the heaven, in the brilliant region above the firmament.

(7) Come with the Maruts, O Agni, who move the mountains (i.e., mountain-high waves) across the billowy ocean.

---

9. The pairs *pitá-putrá* (16 times), *pitá-kumārá* (once) and *pitá-sūnú* (5 times) refer generally to the quadrupeds like the cow. On the other hand, *mātá-sūnú* (once), *mātá-putrá* (3 times) *mātá-gárbha* and *mātá-kumārá* seem to refer to humans.

2 (I.19) *Agni and Maruts*

The hymn is an invitation to Agni and the Maruts for a draught of Soma. The Maruts are described here in special relation to their activities associated with rains. See 1.38.9; 1.64.6; 5.58.3 and *VM*. p.80. For the close relationship of Agni and the Maruts see 1.31.1; 3.13.6; 3.14.4; 3.16.2; 3.26.4-6; 5.3.3; 6.3.8; 8.103.14; and 10.122.5 in particular.

1. *gopīthā́ya*: (*pīthá* from *pā* to drink); see v.9 below and *somapīthá* 10.15.8. Elsewhere in Ṛgveda (5.65.6; 10.35.14; 10.77.7; 10.95.11) *gopīthá* is 'protection (*pīthá* from *pā* to protect) of cows' i.e. protection in general; cf. the word *gopá* and its meaning.
2. *krátum paráḥ:* cf. *vīryà paráḥ* I. 80.15. *paráḥ* is a preposition.
3. *víśve devā́saḥ:* Here the words are used of Maruts as at 1.23.10. But generally a group of gods in general is conveyed by them.
4. *a:* They sing to Agni (3.14.4*b*) and to Indra (1.85.2*c*; 1.165.11*b*; 5.29.1,6; and 8.89.1,3) and are often called the bards of the latter. See 3.32.3 in particular.
7. *párvatān:* mountain-high waves are meant; see 9.35.2 where Soma is called *samudram-īṁkhaya* 'one who agitates the *samudrá*'; or *parvatas* are perhaps 'rain-clouds', see below 5.57.8 on *bṛhadgirayaḥ*, and *samudrá* is the celestial ocean. *samudrám arṇavám:* cf. 10.58.5; 10.190.1-2; also *síndhum arṇavám* 3.53.9.

(8) Come with the Maruts, O Agni, who by their might spread themselves (over the sky) with their own rays, across the ocean.

(9) I pour down the sweet juice of Soma to you for your early draught. Come with the Maruts, O Agni.

3 (I.25) *Varuṇa*

(1) O god Varuṇa, though we break your law day by day, as do the people (the law of their king);

(2) do not hand us over to your deadly weapon when you are malevolent towards us, nor to your wrath when you are angry with us.

(3) Let us release your mind (from its bonds of displeasure) with our prayers for the sake of mercy, O Varuṇa, as a chariot-lord does his horse that is tethered (in his stable).

(4) For, my prayers which are free from malice, fly up to you in search of wealth, like birds flying up to their nests.

(5) When shall we bring here for mercy the far-sighted, manly Varuṇa, who shines with martial power?

---

8. *raśmíbhiḥ:* Either the sun's rays are meant (*sahārthe tṛtīyā*) or, their own rays are referred to as at 1.87.6*b* and 8.7.8 (*karaṇārthe tṛtīyā*). Supply *dyā́m* as the object of *ā́ tanvánti;* cf. 1.35.7*d*; 4.52.7*a*.

9. Construe *abhí* with *tvā* (8.3.7*a*) or take *abhí sṛj* with two accusatives as at 8.45.22; 10.98.5. *somyám mádhu:* cf. 1.14.10.

3 (I.25) *Varuṇa*

The hymn is divisible into three parts in view of its contents. The first part (vv. 1-6) is introductory; it seeks forgiveness for offences and expresses eagerness to meet the god; the second describes the sovereign powers of Varuṇa (vv. 7-15), while the third (vv. 16-21) reverts to the topic of the first and expects a visit from the god to the poet's sacrifice. The last stanza, which is reminiscent of 1.24.13, refers to the story of Śunaśśepa according to the Vedic tradition, for which see *Ait. Br.* VII.13-18.

1. & 2.: Construe the two together. *jihīḷānā́* and *hṛṇānā́* are both adjectives of Varuṇa; see 7.86.5; also 1.24.4; 7.62.4.

3. *sámditam:* (*sám dā* to bind): see *saṁdā́nam dā́ma árvataḥ* 1.162.8.

4. Supply *gíraḥ* from v.3*c* after *vímanyavaḥ;* for *manyú* (of priests), which ought to be avoided, see 7.61.1*d;* 7.86.6*b;* also *manyuṣā́vin* 8.32.21 and *vi-manyuko darbhaḥ Av.* 6.43.1. Western scholars explain the word as 'the removers of the anger' of the god. But the use of *ví* in words like *vígrīva, víparva, vímanas* and *viśikhá* suggest that *manyú* in *vímanyu* should rather belong to the *gíraḥ* which it qualifies than to the deity.

5. *kṣatraśríyam* (from *śrī́* to adorn, beautify) 'one who adorns martial power', cf. *kṣatraśrī́ḥ* (6.26.8) and *ghṛtaśrī́ḥ* (1.128.4); *adhvaraśríyam* (1.44.3).

(6) That common (mercy) the two (i.e. husband and wife) have enjoyed; loving the god, they never fail (to honour) that liberal upholder of his laws, i.e. Varuṇa.

(7) He who knows that path of the birds that fly through the air, knows (also) that of a boat that floats on the sea.

(8) The upholder of his laws knows the twelve months with their brood. He also knows that one which is born by their side.

(9) He knows the path of the vast, lofty and mighty wind; he knows those that dwell above (in heaven).

(10) Varuṇa, the wise upholder of his laws, has sat down (on his throne) in the midst of the (celestial) waters for the sake of his sovereign rule.

(11) From this place the wise one carefully observes all unusual (deeds of men), both those that are already done and those that are intended to be done.

(12) May that wise son of Aditi always prepare for us good paths; may he prolong our lives.

(13) Wearing his golden armour, Varuṇa has put on his royal robe; his spies have sat around him;

(14) whom, the divine one, assailants dare not injure—neither the haters among men, nor the proud (demons);

---

6. *tát* refers to *mṛḷīká* in v. 5 and *dampatī* should be supplied as the subject of the two verbs; cf. 8.31.5-6. Others take *mitrā-varuṇā* as the subject and understand *havis* (Sāyaṇa) or *kṣatram* (Geldner) by the word *tát*. Perhaps this last is right; *prá yucch* is invariably used of a deity; this is true also of the negative form. But then *dhṛtávratāya* will have to refer to the worshipper (only here).

7. *nāváḥ samudríyaḥ* (gen): Supply *padám* from *a* as Sāyaṇa does, *samudríyaḥ* may also be taken as nom. sing. as at 9.107.16; cf. *adbhír yāti váruṇaḥ samudraíḥ* at 1.161.14.

8. *prajā́:* The days of the months are meant, or the people who live through the months (Sāyaṇa). For the former cf. *áhā iva prápra jāyante* at 5.58.5. *c* refers to the intercalary month, for which see *Vedic Index* II. p. 162.

9. *c*: Supply *diví*: cf. 1.19.6; also 9.15.2.

10. See 8.25.8; *pastyàḥ* (fem. pl.) 'waters, rivers'; cf. *VS*. 10.7; for the word see 4.1.11; 10.46.6. For Varuṇa and waters see 1.161.14; 2.38.8; 7.49.3; 7.88.3-4.

12. *viśvā́hā=viśvā ahā,* though never so separated in the Pada Pāṭha. Others like Whitney (see 1100) and Oldenberg consider it as an optional form of *viśvaha* and *viśvahā* (with *ha=hā=dhā* as the suffix). Oldenberg thinks that the lengthening of the second syllable is due to metre; see however, *Noten* I.p.21-22 (foot note). *supáthā karat:* see on 7.63.7 below.

13. c: Varuṇa's spies: see 6.67.5; 7.61.3; 7.87.3; *Av.* 4.16.4.

(15) and who fully extends his glory among men, right within our bellies.

(16) My prayers go far away in the search of the far-sighted one (i.e., Varuṇa), like cows (going) towards their pastures.

(17) Let us once more converse together, while you first enjoy, like our invoking priest, the dear sweet (juice) offered by me.

(18) May I see that all-beautiful god; may I see his chariot on the earth. May he gladly accept these hymns of mine.

(19) Hear this call of mine, O Varuṇa; and do take pity on me today. Seeking your favour I have longed for you.

(20) You rule over the entire (world), over the heaven and over the earth, O wise god; such as you are, listen in response (to my call), while you are on your way.

(21) Untie our uppermost bond; loosen the middle one. (Drop) down the lower (bonds), so that we may live.

4 (I.32) *Indra*

(1) Let me now proclaim the heroic deeds of Indra, which, the fore-

---

15. *á*: The first and the third stress the locative; the second goes with *cakré*. *udáreṣu*: i.e. by creating dropsy by way of punishment; cf. 7.89.2, 4 and *Av.* 4.16.7*cd*.

16. See v. 4 above.

17. Construe *b* and *c* together; *hótā iva*: The Hotṛ priest was the first to drink the Soma; see 5.43.3; 10.94.2. Geldner following Sāyaṇa, thinks that the *ṛk* refers to the Soma-pāna by a patient or an offender doing atonement (cf. 1.179.5). But this is not convincing in view of the words *ábhṛtam* and *priyám* as also the connection of *me* (gen). preferably with *mádhu* than with *ábhṛtam* (as a dative).

18. *dárśam*: or 'I have seen'; the poet has a vision as at 3.54.9; 5.30.2-3.

21. *adhamáni*: Supply *bandhanāni*; cf. 1.163.3*d*. The snares are really the offences committed by the speaker, which are supposed to cling to the body of the offender; see 1.24.14*d* (*rājan énāṁsi śiśrathaḥ kṛtáni* and on 6.74.3 below.

4 (I.32) *Indra*

The hymn mainly describes Indra's slaughter of Vṛtra with a few striking details about the duel between the two. Now and then the poet introduces to this imagery some points which properly belong to the sphere of Vala and the deliverance of the cows along with the luminaries from his custody (v. 4c, 12c). Thus the poet describes how Vṛtra offered very strong opposition employing his missiles against Indra (v. 13), how he dealt a deadly blow on Indra's Vajra from which Indra had to recoil, assuming the form of a horse's hair (v. 12), how he though devoid of hands and feet, though a bad fighter yet continued his attacks, (v. 6, 7) how his mother Dānu interposed herself between the two fighters to save her son (v. 9) and how ultimately both the mother and the son lay dead on the battle-field, the mother yet trying to shield the battered and scattered limbs of her

most ones, the wielder of the bolt performed. He killed Ahi, dug down the waters (and) ripped open the veins of the mountains.

(2) He slew Ahi resting on the mountain; Tvaṣṭṛ fashioned out the roaring Vajra for him. Like lowing cows (to their calf), the waters, flowing forth, went down straight to the ocean.

(3) Behaving like a powerful bull he chose Soma; at the Trikadrukas he drank of the pressed juice. The bounteous god held in his hand his missile, Vajra, (and) slew this first-born among the Ahis.

(4) You surely did not meet with a slayer, O Indra, at the time when you killed the first-born of the Ahis and completely frustrated the wiles of the wily (demons), immediately producing the heaven and the Dawn.

(5) With his mighty weapon, the Vajra, Indra killed Vṛtra, deadlier (than before) even when deprived of his shoulders. Like trunks of trees felled down with a hatchet, Ahi lies down at full length, embracing the earth!

(6) For, like a bad fighter that insolent Ahi challenged the great warrior, the impetuous one who overpowers many. (But) he did not stand the clash of the weapons of this (Indra); having broken his nose by the wound, Ahi, who had Indra as his slayer, was completely crushed!

---

son (v. 9).

1. *apás tatarda:* see 2.15.3; 4.19.8; 7.82.3*a*. *d*: *vakṣáṇāḥ* are the water-carrying veins of the mountain; see 1.57.6*abc*; 1.121.11*c*.
2. *b*: see 1.52.7; 1.61.6; 5.31.4; 6.17.10; 10.48.3. *c*: Supply *śíśum* in the simile; see 10.75.4; *cd*: cf. 4.22.7.
3. Trikadruka is the name of a triple sacrifice consisting of *jyotis, gauḥ* and *āyus* according to Sāyaṇa. Perhaps the name owes its origin to the three Kadrūs or vessels filled with Soma which Indra drank before killing Vṛtra; see 5.29.7; 6.17.11; for *kadrú* cf. 8.45.26. *sắyakam* is adj. of *vájram;* cf. 1.84.11; 10.83.1.
4. *c*: The result of the slaughter of Vala is here associated with the slaughter of Vṛtra as at 2.19.3 and 8.3.20. On the other hand, the result of the latter is associated with the former at 6.30.5. Also see on v. 11 and v. 12 below.
5. *a*: *vyàṁsam* 'devoid of shoulders'; see v. 7 and 3.30.8. Elsewhere, Vyaṁsa seems to be the name of another demon. *c:* cf. 1.130.4*fg*. Dismembered Vṛtra-Ahi is compared with a tree with its main trunks chopped off with an axe. *d*: *śayate* is ironical; cf. 1.179.7*d*; 10.89.14*d*. The form is historical or visional present.
6. *ayoddhá* is either Nañ Tatpuruṣa or Nañ Bahuvrīhi. Thus either 'a non-fighter' or 'a matchless fighter'. The adjective *durmádaḥ* favours the former rather than the latter. *d*: *sám pipiṣe* is passive; so that *rujā́nāḥ* is an adjective of Vṛtra: thus *ruja-anas* or *ruja-nās* 'one who breaks his cart or nose'. In the former case *ánas* stands secondarily for the body; in the latter, there is the lengthening as in *radā́vasu*.

(7) (Though) devoid of hands and feet, he still fought with Indra; he (i.e., Indra), hurled the Vajra on his shoulder. Seeking to be the rival of the mighty (bull), the impotent (bull) i.e., Vṛtra lay there dismembered in many places.

(8) Gaining back their spirit, the Waters pass over (that Ahi), who was thus lying helplessly like a mangled roarer. That Ahi has now lain at the feet of those very waters, whom the encompasser had blocked up by his greatness!

(9) Vṛtra's mother had her strength declining; Indra brought down his weapon upon her. The mother was above, the son below; Dānu lay down like a cow with her calf.

(10) The Waters variously pass over the (now) invisible body of Vṛtra, placed in the midst of their never-resting, never-encamping streams. He whose slayer was Indra has lain in a long-lasting darkness!

(11) Mastered by the Dāsa and guarded by Ahi, the Waters stood blocked up, like the cows by the Paṇi (i.e. Vala). Having killed Vṛtra, Indra flung open that cave of the waters which was blocked up by him.

(12) Being the sole (incomparable) god, you became a horse's hair, O Indra, when he (i.e. Vṛtra), dealt you a blow on your bolt. You

---

7. *apā́d ahastó:* Because he is imagined as a reptile, he is said to be devoid of hands and feet; cf. 5.30.8. *c*: cf. 1.33.6*c*; 2.25.3*b*. *d*: *aśayat*: cf. vv. 5, 8-10. There is an ironical tone in the expression; cf. 7.18.8*d*, 14*b*.

8. *nadá* is a 'roaring, challenging bull': see *vádhriḥ* in v. 7 and *ā́ juhvé* in v. 6. For *nadá* see 2.34.3*b*; 8.69.2; 10.105.4*c*; and *Av.* 4.15.1c. *amuyā́:* see on *dhṛṣṇuyā́* at 4.30.13. *b: máno rúhāṇāḥ: mánas* is conceived as a chariot; see *yuñjáte mánaḥ* 1.48.4; 5.81.1, also *ślókam ā́ rohase diví* 1.51.12; *ā́ rohata ā́yuḥ* 10.18.6. We may also compare the later idea of *mano-ratha* in Classical Sanskrit. *patsutáḥ* is a double formation, a mixture of *patsú* and *pattáḥ* both meaning the same: 'at the feet'; cf. *vājínīvatī* which is a mixture of *vājínī* and *vā́javatī*.

9. See 3.30.8. *Dā́nu* elsewhere signifies a demon in general.

10. *kā́ṣṭhā* signifies the inanimate and *ā́paḥ* the personified form of the waters (as in vv. 8 and 11). *c: niṇyám* 'hidden', because it was lying at the bottom of the rivers; see *patsutaḥśī́ḥ* v. 8. *ví caranti:* see *áti yanti* v. 8. *d:* see 4.51.3*cd; dīrghám támaḥ:* cf. *dīrghā́ḥ támisrāḥ* at 2.27.14 both signify death. See also on 4.51.3*cd*.

11. *b:* Very likely the Paṇi here is Vala as the leader of the Paṇis, as suggested by 6.39.2*cd* and 10.67.6. That also explains the use of the word *bíla* (with *apā́m*), which is characteristic of the Vala imagery; see 1.11.5. So that here 'rivers blocked by Vṛtra' are compared with 'cows imprisoned by Vala, the Paṇi leader'; see on v. 4 above.

12. Indra's powers of mystic transformation are often mentioned; he is called *pururū́paḥ* (6.47.18) and *várpaṇītiḥ* (3.34.3). At 3.53.8 he

